# औशनस स्मृतिः

## अथ औशनस संहिता

श्रीगणेशाय नमः

### अथानुलोमप्रतिलोमजात्यन्तराणां निरूपणवर्णनम्

अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम्
अनुलोमविधानञ्च प्रतिलोमविधिं तथा १
सान्तरालकसंयुक्तं सर्वं संक्षिप्य चोच्यते
नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् २
जातः सूतोऽत्र निर्द्दिष्टः प्रतिलोमविधिर्द्विजः
वेदानहस्तथा चैषां धर्माणामनुबोधकः ३
सूताद्विप्र प्रसूतायां सूतो वेणुक उच्यते
नृपायामेव तस्यैव जातो यश्चर्मकारकः ४
ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रजायते
वृत्तञ्च शूद्रवृत्तस्य द्विजत्वं प्रतिषिध्यते ५
यानानां ये च वोढारस्तेषाञ्च परिचारकाः
शूद्रवृत्त्या तु जीवन्ति न क्षात्रं धर्ममाचरेत् ६
ब्राह्मण्यां वैश्यसंसर्गाज्जातोमागध उच्यते
वन्दित्वं ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः ७
प्रशंसावृत्तिको जीवेद्वैश्यप्रेष्यकरस्तथा
ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ८
सीसमाभरणं तस्य कार्ष्णायसमथापि वा
वध्रीं कण्ठे समावध्य झल्लरीं कक्षतोऽपि वा ९
मल्लापकर्षणं ग्रामे पूर्वाह्णे परिशुद्धिकम्
नापराह्णे प्रविष्टोऽपि वहिर्ग्रामाच्च नैर्ऋते १०
पिण्डीभूता भवन्त्यत्र नोचेद् बध्या विशेषतः
चाण्डालाद्वैश्यकन्यायां जातः श्वप च उच्यते ११

श्वमांसभक्षणं तेषां श्वान एव च तद्बलम्
नृपायां वैश्यसंसर्गादायोगव इति स्मृतः १२
तन्तुवाया भवन्त्येव वसुकांस्योपजीविनः
शीलिकाः केचिदत्रैव जीवनं वस्त्रनिर्मिते १३
आयोगवेन विप्रायां जातास्ताम्रोपजीविनः
तस्यैव नृपकन्यायां जातः सूनिक उच्यते १४
सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः
निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः १५
नृपायां वैश्यतश्चौर्यात्पुलिन्दः परिकीर्तितः
पशुवृत्तिभवेत्तस्य हन्युस्तान् दुष्टसत्वकान् १६
नृपायां शूद्रसंसर्गाज्जातः पक्कश उच्यते
सुरावृत्तिं समारुह्य मधुविक्रयकर्मणा १७
कृतकानां सुराणाञ्च विक्रेता याचको भवेत्
पुक्कशाद्वैश्यकन्यायां जातो रजक उच्यते १८
नृपायां शूद्रतश्चौर्याज्जातो रञ्जक उच्यते
वैश्यायां रञ्जकाज्जातो नर्त्तको गायको भवेत् १९
वैश्यायां शूद्रसंसर्गाज्जातो वैदेहिकः स्मृतः
अजानां पालनं कुर्यान्महिषीणां गवामपि २०
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत्
वैदेहिकात्तु विप्रायां जाताश्चर्मोपजीविनः २१
नृपायामेव तस्यैव स्नचिकः पाचकः स्मृतः
वैश्यायां शूद्रतश्चौर्याजातश्चक्री च उच्यते २२
तैलपिष्टकजीवी तु लवणं भावयन् पुनः
विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम् २३
जातः सुवर्ण इत्युक्तः सानुलोमद्विजः स्मृतः
अथ वर्णक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम् २४

अश्वं रथं हस्तिनं वा वाहयेद्वा नृपाज्ञया
सैनापत्यञ्च भैषज्यं कुर्याज्जीवेत्तु वृत्तिषु २५
नृपायां विप्रतश्चौर्यात्संजातो यो भिषक्स्मृतः
अभिषिक्तनृपस्याज्ञां परिपाल्येत्तु वैद्यकम् २६
आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत्
ज्यौतिषं गणितं वाऽपि कायिकीं वृत्तिमाचरेत् २७
नृपायां विधिना विप्राज्जातो नृप इति स्मृतः
नृपायां नृपसंसर्गात्प्रमादादूढजातकः २८
सोऽपि क्षत्रिय एव स्यादभिषेके च वर्जितः
अभिषेकं विना प्राप्य गोज इत्यभिधायकः २९
सर्वन्तु राजवृत्तस्य शस्यते पदवन्दनम्
पुनर्भूकरणे राज्ञां नृपकानीन एव च ३०
वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते
कृष्याजीवो भवेत्तस्य तथैवाग्नेयवृत्तिकः ३१
ध्वजिनी जीविका वाऽपि अम्बष्ठाः शस्त्रजीविनः
वैश्यायां विप्रतश्चौर्यात्कुम्भकारः स उच्यते ३२
कुलालवृत्त्या जीवेत नापिता वा भवन्त्यतः
सूतके प्रेतके वाऽपि दीक्षाकालेऽथ वापनम् ३३
नाभेरूर्द्ध्वं तु वपनं तस्मान्नापित उच्यते
कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः ३४
काकाल्लौल्यं यमात्क्रौर्यं स्थपतेरथ कृन्तनम्
आद्याक्षराणि संगृह्य कायस्थ इति कीर्तितः ३५
शूद्रायां विधिना विप्राज्जातः पारशवोमतः
भद्रकादीन् समाश्रित्य जीवेयुः पूजकाः स्मृताः ३६
शिवाद्यागमविद्याद्यैस्तथामण्डलवृत्तिभिः
तस्यां वै चौरसो वृत्तो निषादो जात उच्यते ३७

वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयम्
नृपाज्ञातोऽथ वैश्यायां गृह्यायां विधिना सुतः ३८
वैश्यवृत्या तु जीवेत क्षात्रधर्मं न चाचरेत्
तस्यां तस्यैव चौरेण मणिकारः प्रजायते ३९
मणीनां राजतां कुर्यान्मुक्तानां वेधनक्रियाम्
प्रवालानाञ्च सूत्रित्वं शाखानां बलयक्रियाम् ४०
शूद्रस्य विप्रसंसर्गाज्जात उग्र इति स्मृतः
नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु सञ्चरेत् ४१
तस्यैव चौरसंवृस्या जातः शुण्डक उच्यते
जातदुष्टान् समारोप्य शुण्डाकर्मणि योजयेत् ४२
शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः
सूचकाद्विप्रकन्यायां जातस्तक्षक उच्यते ४३
शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा
नृपायामेव तस्यैव जातो यो मत्स्यबाधकः ४४
शूद्रायां वैश्यतश्चौर्यात् कटकार इति स्मृतः
वशिष्ठशापात्त्रेतायां केचित् पारशवास्तथा ४५
वैखानसेन केचित्तु केचिद्भागवतेन च
वेदशास्त्राबलम्वास्ते भविष्यन्ति कलौ युगे ४६
कटकारास्ततः पश्चान्नारायणगणाः स्मृताः
शाखा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः ४७
निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूचिकाः
पञ्चरात्रेण वा प्राप्तं प्रोक्तं धर्मं समाचरेत् ४८
शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः
द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः ४९
सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा
चौर्यात्काकवचो ज्ञेयश्चाश्वानां तृणवाहकः ५०

एतत्संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः
जात्यन्तराणि दृश्यन्ते संकल्पादित एव तु  ५१

इत्यौशनसं धर्मशास्त्रं समाप्तम्

शुक्रसंहिता समाप्ता

Reference:
*Smṛti Sandarbha*, Vol. III, (Delhi:  Nag, 1981), pp. 1544ff.